श्रीउत्तरा-ध्ययनसूत्रे श्रीनेमिचन्द्रीया सुखबोधाख्या लघुवृत्तिः । ॥३९०॥

निष्ठुरवक्रोक्त्यादिरूपा, कन्दर्पकथा—कामस्य कथा, कौकुच्यं द्विधा—कायेन वाचा, तथा च—"भ्रूनयणवयणदसणच्छएहिं करचरणकण्णमाईहिं । तं तं करेइ जह जह, हसइ परो अत्तणा अहसं ॥ १ ॥ वायाए कोकुइओ, तं जंपइ जेण हसए अन्नो । नाणाविहजीवरुए, कुणइ मुहतूरए चेव ॥ २ ॥" "तह" त्ति येन प्रकारेण परस्य विस्मय उपजायते तथा चर्यीकं च—फलनिरपेक्षा वृत्तिः स्वभावश्च—परविस्मयोत्पादनाभिसन्धिनैव तत्तन्मुखविकारादिकं स्वरूपं हसनं च—अट्टाट्टहासादि विकथाश्च—परविस्मापकविविधोल्लापरूपाः शीलस्वभावहासविकथास्ताभिर्विस्मापयन् परं "कंदप्प" ति कन्दर्पयोगात्कन्दर्पाः ते च प्रस्तावाद् देवास्तेषामियं कान्दर्पी तां 'भावनां' तद्भावाऽभ्यासरूपां करोति ॥ "मंतायोगं" ति सूत्रत्वात् मन्त्राश्च योगाश्च—तथाविधद्रव्यसंयोगा मन्त्रयोगं तत् कृत्वा भूत्या—उपलक्षणत्वात् मृदा सूत्रेण च कर्म—रक्षार्थं क्रिया भूतिकर्म, चशब्दात् कौतुकादि च "जे पउंजंति" त्ति प्राकृतत्वाद् यः प्रयुङ्क्ते 'सातरसर्द्धिहेतोः' सातायर्थमिति भावः, अनेन पुष्टालम्बने निःस्पृहत्वेन कुर्वतः प्रत्युत गुण इति ज्ञापयति, स आभियोगी भावनां करोति ॥ नाणे"त्यादि प्रकटम् । नवरम्—ज्ञानस्याऽवर्णवादी, यथा—"कांया वया य ते चिय, ते चेव पमायमप्पमाया य । मोक्खाहिगारियाणं, जोइसजोणीहिं किं कज्जं ? ॥ १ ॥" धर्माचार्यस्य—"जच्चाईहिं अवन्नं, विहसइ वट्टइ न यावि उववाए । अहिओ छिद्दप्पेही, पगासवाई अणणुकूलो ॥ १ ॥ साधूनां च—"अविसहणाऽतुरियगई, अणणुवत्ती इमे गुरूणं पि ।

१ "भ्रूनयनवदनदशनच्छदैः करचरणकर्णादिभिः । तत्करोति यथा यथा हसति पर आत्मनाऽहसन् ॥१॥ वाचा कौकुच्यिकस्तज्जल्पति येन हसत्यन्यः । नानाविधजीवरुतान् करोति मुखतूर्याणि वा ॥२॥" २ "कायाव्रतानि च तान्येव तानेव प्रमादाप्रमादौ च । मोक्षाधिकारिणां ज्योतिर्योनिभिः किं कार्यम् ? ॥१॥" ३ "जात्यादिभिरवर्णं विहसति वर्तते न चाप्युपपाते । अहितश्छिद्रप्रेक्षी प्रकाशवाद्यननुकूलः ॥१॥" ४ "अविसहना अत्वरितगतयोऽननुवृत्तयश्चेमे गुरूणामपि ।"

षट्त्रिंशं जीवाजीवविभक्तिनामकमध्ययनम् ।

संसारिजीववक्तव्यता ।

संसारिजीव वक्तव्यता।

रसणमेत्तपीइरोसा, गिद्धिवच्छलगा य संजइया ॥ १ ॥" 'मायी' स्वस्वभावनिगूहनादिमान्, यथोक्तम्—"गुंहइ आयसहावं, घायइ य गुणे परस्स सते वि। चोरो व्व सव्वसंकी, गूढायारो वितहभासी ॥ १ ॥" इदानीं विचित्रत्वात् सूत्रकृतेर्मोहीप्रस्तावेऽप्यासुरीभावना यत्कुर्वता कृता भवति तदाह—'अणुबद्ध'त्यादि स्पष्टम् । नवरम्—अनुबद्धरोपप्रसरस्वरूपम्—निच्चं वुग्गहसीलो, काऊण य याणुतप्पए पच्छा । न य सामिओ पसीयइ, अवराहीणं दुवेण्हं पि ॥ १ ॥" 'तथा' समुच्चये, 'चः' पूरणे, निमित्तम्—अतीतादि तद्विषये भवति 'प्रतिसेवी' अपुष्टालम्बनेऽपि तदासेवनात् ॥ शस्त्रस्य ग्रहणम्—आत्मनि वधार्थं व्यापारणं शस्त्रग्रहणं, विषभक्षणं, चशब्द उक्तसमुच्चयार्थः पर्यन्ते योक्ष्यते, 'ज्वलनं' दीपनमात्मन इति गम्यते, जलप्रवेशः, चशब्दोऽनुक्तभृगुपातादिपरिग्रहार्थः, आचारः—शास्त्रविहितः व्यवहारस्तेन भाण्डम्—उपकरणमाचारभाण्डं न तथा अनाचारभाण्डं तस्य सेवा—हासमोहादिभिः परिभोगः अनाचारभाण्डसेवा, सा च गम्यमानत्वाद् एतानि कुर्वन्तो यतयः 'जन्मजरामरणानि' उपचारात् तत्तन्निमित्तकर्माणि बध्नन्ति इति, अनेन चोन्मार्गप्रतिपत्त्या मार्गविप्रतिपत्तिराक्षिप्ता, तथा चाऽर्थतो मोहीभावनोक्ता । यतस्तल्लक्षणम्—"उम्मग्गदेसओ मग्गनासओ मग्गविप्पडीवत्ती । मोहेण य मोहेत्ता, सम्मोहं भावणं कुणइ ॥ १ ॥" फलं चाऽऽसाम्—"एयाओ भावणाओ, भावित्ता देवदुग्गइं जंति । तत्तो य चुया सता, पडंति भवसागरमणंतं ॥ २ ॥" इति सूत्रपञ्चकार्थः ॥ २६३-२६४-२६५-२६६-२६७ ॥ सम्प्रत्युपसंहारद्वारेण शास्त्रस्य माहात्म्यमाह—

क्षणमात्रप्रीतिरोषाः गृद्धिवत्सलाश्च संयताः ॥ १ ॥" १ "गूहते आत्मस्वभावं घातयति च गुणान् परस्य सतोऽपि । चौर इव सर्वशङ्की, गूढाकारो वितथभाषी ॥ १ ॥" २ "नित्यं व्युद्ग्रहशीलः कृत्वा न चानुतप्यते पश्चात् । न च क्षामितः प्रसीदति अपराधिनोर्द्वयोरपि ॥ १ ॥" ३ "उन्मार्गदेशको मार्गनाशको मार्गविप्रतिपत्तिः । मोहेन च मोहयित्वा सम्मोहीं भावनां करोति ॥ १ ॥" ४ "एता भावना भावयित्वा देवदुर्गतिं यान्ति । ततश्च च्युताः सन्तः पतन्ति भवसागरमनन्तम् ॥ १ ॥"

इइ पाउकरे बुद्धे नायए परिनिवुए । छत्तीसं उत्तरज्झाए भवसिद्धीयसम्मए ॥२६८॥ त्ति बेमि ॥

व्याख्या—'इति' एताननन्तरमुपवर्णितान्, "पाउकरे" त्ति 'प्रादुःकृत्य' कांश्चिदर्थतः कांश्चन सूत्रतोऽपि प्रकाश्य 'बुद्धः' केवलज्ञानावगतसकलवस्तुतत्त्वः 'ज्ञातजः' ज्ञातकुलसमुद्भवः, स चेह भगवान् महावीरः 'परिनिर्वृतः' निर्वाणं गतः, षट्त्रिंशद् उत्तराः—प्रधाना अध्यायाः—अध्ययनानि उत्तराध्यायाख्यान्, भवसिद्धिकानां—भव्यानां सम्मतान्—अभिप्रेतान्, 'इतिः' परिसमाप्तौ, ब्रवीमीति पूर्ववदिति सूत्रार्थः ॥ २६८ ॥ निर्युक्तिकार एतन्माहात्म्यमाह—"जे[1] किर भवसिद्धीया, परित्तसंसारिया य जे भव्वा । ते किर पढंति एए, छत्तीसं उत्तरज्झाए ॥ १ ॥ तम्हा जिणपण्णत्ते, अणंतगम-पज्जवेहि संजुत्ते । अज्झाए जहजोगं, गुरुप्पसाया अहिज्जिज्जा ॥ २ ॥" योगः—उपधानादिव्यापारस्तदनतिक्रमेण यथायोगम् ॥

[1] "ये किल भवसिद्धिकाः परीतसंसारकाश्च ये भव्याः । ते किल पठन्त्येतान् षट्त्रिंशदुत्तराध्यायान् ॥ १ ॥ तस्माज्जिनप्रज्ञप्तान् अनन्तगमपर्ययैः संयुक्तान् । अध्यायान् यथायोगं गुरुप्रसादादधीयीत ॥ २ ॥"

इति श्रीनेमिचन्द्रसूरिविनिर्मितायां उत्तराध्ययनसूत्रलघुटीकायां सुखबोधायां जीवाजीवविभक्तिनामकं षट्त्रिंशमध्ययनं समाप्तम् ॥

॥ समाप्तानि चाशेषाण्युत्तराध्ययनानि ॥

## श्रीउत्तराध्ययनसूत्रलघुव्याख्याव्याख्यातुः प्रशस्तिः ।

अस्ति विस्तारवत्युर्व्यां, गुरुशाखासमन्वितः । आसेव्यो भव्यसार्थानां, श्रीकोटिकगणद्रुमः ॥ १ ॥ तदुत्थवैरिशाखायाम-
भूदायतिशालिनी । विशाला प्रतिशाखेव, श्रीचन्द्रकुलसन्ततिः ॥ २ ॥ तस्याश्चोत्पद्यमानच्छदनिचयसदृक्षावकर्णान्वयोत्थ-
श्रीधारापद्रगच्छप्रसवभरलसद्धर्मकिञ्जल्कपानात् । श्रीशान्त्याचार्यभृङ्गः प्रवरमधुसमामुत्तराध्यायवृत्तिं, विद्वल्लोकस्य
दत्तप्रमुदमुदगिरद् या गभीरार्थसाराम् ॥ ३ ॥ तस्याः समुद्धृता चेषा, सूत्रमात्रस्य वृत्तिका । एकपाठगता मन्दबुद्धीनां हितकाम्य-
या ॥ ४ ॥ आत्मसंस्मरणार्थाय, यथा मन्दधिया मया । अतोऽपराधमेनं मे, क्षमन्तु श्रुतशालिनः ॥ ५ ॥ आसीच्चन्द्रकुलोद्भूतो,
विख्यातो जगतीतले । अक्षमाराजितोऽप्युच्चैर्यः क्षमाराजितः सदा ॥ ६ ॥ धर्मोऽथ मूर्त्तिमानेव, सौम्यमूर्त्तिः शशाङ्कवत् । वर्जि-
तश्चाशुभैर्भावै रागद्वेषमदादिभिः ॥ ७ ॥ सुनिर्मलगुणैर्नित्यं, प्रशान्तैः श्रुतशालिभिः । प्रद्युम्न-मानदेवादिसूरिभिः प्रविराजितः
॥ ८ ॥ विपुलस्य महीपीठे, बृहद्गच्छस्य मण्डनम् । श्रीमान् विहारुकप्रष्ठः, सूरिरुद्योतनाभिधः ॥ ९ ॥ शिष्यस्तस्याऽऽम्रदेवोऽ-
भूदुपाध्यायः सतां मतः । यत्रैकान्तगुणापूर्णे, दोषैर्लेभे पदं न तु ॥ १० ॥ श्रीनेमिचन्द्रसूरिरुद्धृतवान् वृत्तिकां तद्विनेयः । गुरु-
सोदर्यश्रीमन्मुनिचन्द्राचार्यवचनेन ॥ ११ ॥ शोधयतु बृहदनुग्रहबुद्धिं मयि सविधाय विज्ञजनः । तत्र च मिथ्यादुष्कृतमस्तु
कृतमसङ्गतं यदिह ॥ १२ ॥ अणहिलपाटकनगरे, दोहडिसच्छ्रेष्ठिसत्कवसतौ च । सन्तिष्ठता कृतेयं, नवकरहरवत्सरे चैव
॥ १३ ॥ पट्टिकातोऽलिखच्चेमां, सर्वदेवाभिधो गणी । आत्मकर्मक्षयायाऽथ, परोपकृतिहेतवे ॥ १४ ॥ दोहडिश्रेष्ठिना चाऽस्या,
लेखिता प्रथमा प्रतिः । जिनवाक्यानुरक्तेन, भक्तेन गुणवज्जने ॥ १५ ॥ अनुष्टुभां सहस्राणि, गणितक्रियया भवन् । द्वादश ग्रन्थ-
मानं तु, वृत्तेरस्या विनिश्चितम् ॥ १६ ॥ ग्रन्थाग्रं सूत्रेण सह [ १३५५० ] श्रीउत्तराध्ययनलघुवृत्तिः परिपूर्णा ॥ संवत् १५४५
वर्षे कार्त्तिकशुदि ३ दिने श्रीधर्मघोषगच्छे मूलपट्टे श्रीधर्मसूरिसन्ताने श्रीपद्मशेखरसूरिपट्टालङ्करणगच्छाधिराजश्रीपद्मान-
न्दसूरिशिष्यवाचकश्रीभावशेखरवाचनार्थं लिखितमिदं मुनिना क्षमारत्नेन श्रुतज्ञानवृद्धये ॥ शुभं भवतु श्रीपार्श्वप्रसादात् ॥